## चतुर्दशः पाठः

# vukfjdk;k% ftKklk



ऋकारान्तपुँल्लिङ्गः

बालिकायाः अनारिकायाः मनसि सर्वदा महती जिज्ञासा भवति। अतः सा बहून् प्रश्नान् पृच्छति। तस्याः प्रश्नैः सर्वेषां बुद्धिः चक्रवत् भ्रमति।

प्रातः उत्थाय सा अन्वभवत् यत् तस्याः मनः प्रसन्नं नास्ति। मनोविनोदाय सा भ्रमितुं गृहात् बहिः अगच्छत्। भ्रमणकाले सा अपश्यत् यत् मार्गाः सुसज्जिताः सन्ति। सा चिन्तयति – किमर्थम् इयं सज्जा? सा अस्मरत् यत् अद्य तु मन्त्री आगमिष्यति। सः अत्र किमर्थम् आगमिष्यति इति विषये तस्याः जिज्ञासाः प्रारब्धाः। गृहम् आगत्य सा पितरम् अपृच्छत्–''पितः! मन्त्री किमर्थम् आगच्छति?'' पिता अवदत्–''पुत्रि! नद्याः उपरि नवीनः सेतुः निर्मितः। तस्य उद्घाटनार्थं मन्त्री आगच्छति।'' अनारिका पुनः अपृच्छत्–''पितः! किं मन्त्री सेतोः निर्माणम् अकरोत्?'' पिता अकथयत्–''न हि पुत्रि! सेतोः निर्माणं कर्मकराः अकुर्वन्।'' पुनः अनारिकायाः प्रश्नः आसीत्–''यदि कर्मकराः सेतोः निर्माणम् अकुर्वन्, तदा मन्त्री किमर्थम् आगच्छति?'' पिता अवदत्–''यतो हि सः अस्माकं देशस्य मन्त्री।'' ''पितः! सेतोः निर्माणाय प्रस्तराणि कुतः आयान्ति? किं तानि मन्त्री ददाति?''



© NCERT not to be republished

विरक्तभावेन पिता उदतरत्–''अनारिके! प्रस्तराणि जनाः पर्वतेभ्यः आनयन्ति।'' ''पितः! तर्हि किम्, एतदर्थं मन्त्री धनं ददाति? तस्य पार्श्वे धनानि कुतः आगच्छन्ति?'' एतान् प्रश्नान् श्रुत्वा पिताऽवदत्–''अरे! प्रजाः सर्वकाराय धनं प्रयच्छन्ति।'' विस्मिता अनारिका पुनः अपृच्छत्–''पितः! कर्मकराः पर्वतेभ्यः प्रस्तराणि आनयन्ति। ते एव सेतुं निर्मान्ति। प्रजाः सर्वकाराय धनं ददति। तथापि सेतोः उद्घाटनार्थं मन्त्री किमर्थम् आगच्छति?''

पिता अवदत्–''प्रथममेव अहम् अकथयम् यत् सः एव देशस्य मन्त्री अस्ति। बहुप्रश्नान् करोषि। चल, सुसज्जिता भूत्वा विद्यालयं चल।'' इदानीम् अपि अनारिकायाः मनसि बहवः प्रश्नाः सन्ति।

## शब्दार्थाः

| | | | |
|---|---|---|---|
| **महती** | – | बड़ी | great |
| **जिज्ञासा** | – | जानने की इच्छा | curiosity |
| **अन्वभवत्** | – | अनुभव किया | felt |
| **मनोविनोदाय** | – | मन प्रसन्न करने के लिए | for recreation |
| **चिन्तयति** | – | सोचती है | thinks |
| **अस्मरत्** | – | याद किया | remembered |
| **सेतुः** | – | पुल | bridge |
| **उदतरत्**(उत्+अतरत्) | – | उत्तर दिया | answered |
| **प्रस्तराणि** | – | पत्थर | stones |
| **सर्वकाराय** | – | सरकार के लिए | for the government |
| **उद्घाटनार्थम्** | – | उद्घाटन के लिए | for the inauguration |
| **निर्मान्ति** | – | निर्माण करते हैं/बनाते हैं | construct |
| **ददति** | – | देते हैं | give |





© NCERT not to be republished




**1. उच्चारणं कुरुत-**

| | | |
|---|---|---|
| मन्त्री | निर्माणम् | भ्रात्रा |
| कर्मकराः | जिज्ञासा | पित्रे |
| भ्रातॄणाम् | उद्घाटनार्थम् | पितृभ्याम् |
| नेतरि | अपृच्छत् | चिन्तयति |

**2. अधोलिखितानां प्रश्नानां उत्तराणि लिखत-**

(क) कस्याः महती जिज्ञासा वर्तते?

(ख) मन्त्री किमर्थम् आगच्छति?

(ग) सेतोः निर्माणं के अकुर्वन्?

(घ) सेतोः निर्माणाय कर्मकराः प्रस्तराणि कुतः आनयन्ति।

(ङ) के सर्वकाराय धनं प्रयच्छन्ति?

**3. रेखाङ्कितपदानि आधृत्य प्रश्ननिर्माणं कुरुत-**

(क) <u>अनारिकायाः</u> प्रश्नैः सर्वेषां बुद्धिः चक्रवत् भ्रमति।

(ख) मन्त्री सेतोः <u>उद्घाटनार्थम्</u> आगच्छति।

(ग) <u>कर्मकराः</u> सेतोः निर्माणम् कुर्वन्ति।

(घ) <u>पर्वतेभ्यः</u> प्रस्तराणि आनीय सेतोः निर्माणं भवति।

(ङ) जनाः <u>सर्वकाराय</u> देशस्य विकासार्थं धनं ददति।

**4. उदाहरणानुसारं रूपाणि लिखत-**

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | पिता | पितरौ | पितरः (पितृ) |
| | .......... | भ्रातरौ | .......... (भ्रातृ) |

© NCERT not to be republished

| | | | |
|---|---|---|---|
| द्वितीया | दातारम् | दातारौ | दातॄन् (दातृ) |
| | .......... | धातारौ | .......... (धातृ) |
| तृतीया | धात्रा | ......... | धातृभिः (धातृ) |
| | .......... | कर्तृभ्याम् | .......... (कर्तृ) |
| चतुर्थी | नेत्रे | नेतृभ्याम् | नेतृभ्यः (नेतृ) |
| | विधात्रे | .......... | .......... (विधातृ) |
| पञ्चमी | कर्तुः | कर्तृभ्याम् | कर्तृभ्यः (कर्तृ) |
| | .......... | .......... | हर्तृभ्यः (हर्तृ) |
| षष्ठी | पितुः | पित्रोः | पितॄणाम् (पितृ) |
| | .......... | भ्रात्रोः | .......... (भ्रातृ) |
| सप्तमी | सवितरि | सवित्रोः | सवितृषु (सवितृ) |
| | अभिनेतरि | .......... | .......... (अभिनेतृ) |
| सम्बोधनम् | हे जामातः! | हे जामातरौ! | हे जामातरः (जामातृ) |
| | हे नप्तः! | .......... | .......... (नप्तृ) |

5. **कोष्ठकेभ्यः समुचितपदानि चित्वा रिक्तस्थानानि पूरयत-**

(क) अहं प्रातः .................. सह भ्रमणाय गच्छामि। (पित्रा/पितुः)

(ख) बाला आपणात् .................. फलानि आनयति। (भ्रातुः/भ्रात्रे)

(ग) कर्मकराः सेतोः निर्माणस्य .................. भवन्ति। (कर्तारम्/कर्त्तारः)

(घ) मम .................. तु एतेषां प्रश्नानाम् उत्तराणि अददात्। (पिता/पितरः)

(ङ) तव .................. कुत्र जीविकोपार्जनं कुरुतः? (भ्रातरः/भ्रातरौ)

© NCERT not to be republished

## 6. चित्रं दृष्ट्वा मञ्जूषातः पदानि च प्रयुज्य वाक्यानि रचयत-




| धारयन्ति | बालाः | वसयानम् | छत्रम् | ते | आरोहन्ति | वर्षायाम् |
|---|---|---|---|---|---|---|

..................................................................................................

..................................................................................................

..................................................................................................

..................................................................................................

## 7. अधोलिखितानि पदानि आधृत्य वाक्यानि रचयत-

प्रश्नाः = ......................................................

नवीनः = ......................................................

प्रातः = ......................................................

आगच्छति = ......................................................

प्रसन्नः = ......................................................

© NCERT not to be republished